पुत्रमवाहाः नावा गंतुं पर्यत्याक्षीत्। तत्र दृष्टांतः। ममृवान् म्रियमाणः सन्धनलोभी कश्चिन्मनुष्यो रयिं न यथा धनं परित्यजति तद्वत्। हे अश्विनौ तं च भुज्युं मध्येसमुद्रं निमग्नं नौभिः पितृसमीपमूहथुः युवां प्रापितवंतौ। कीदृशीभिः आत्मन्वतीभिः आत्मीयाभिः। युवयोः स्वभूताभिरित्यर्थः। यद्वा धृतिरात्मा। धारणवतीभिरित्यर्थः। अंतरिक्षप्रुद्भिः अतिस्वच्छत्वादंतरिक्षे जलस्योपरिष्टादेव गंत्रीभिः। अपोदकाभिः सुश्लिष्टत्वादपगतोदकाभिः। अप्रविष्टोदकाभिरित्यर्थः॥ उदमेघे। मिह सेचने। कर्मणि घञ्। न्यंक्वादीनां चेति कुत्वम्। उदकस्योदः संज्ञायाम्। थाथादिनोत्तरपदांतोदात्तत्वम्। ममृवान्। मृङ् प्राणत्यागे। लिटः क्वसुः। क्रादिनियमात्प्राप्तस्येटो वस्वेकाजाद्घसामिति नियमादभावः। अहाः। ओहाक् त्यागे। लुङि तिपि च्लेः सिच्। आगमानुशासनस्यानित्यत्वात्सगिटौ न क्रियेते। बहुलं छंदसीतीडभावः। हल्ङ्याब्भ्य इति तिलोपः। रुत्वविसर्गौ। यद्वा मंत्रे घसेति च्लेर्लुक्। च्लेर्लुप्तत्वादिण् न क्रियते। नौभिः। सावेकाच इति विभक्तेरुदात्तत्वम्। आत्मन्वतीभिः। आत्मनो मतुप्। मादुपधाया इति वत्वम्। अनो नुडिति नुट्। नलोपः। ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वम्। अंतरिक्षप्रुद्भिः। प्रुङ् गतौ। क्विप् चेति क्विप्॥

**ति॒स्रः क्षप॒स्त्रिरहा॑ति॒व्रज॑द्भि॒र्नास॑त्या भु॒ज्युमू॑हथुः पत॒ङ्गैः।**
**स॒मु॒द्रस्य॒ धन्व॑न्ना॒र्द्रस्य॑ पा॒रे त्रि॒भी रथैः॑ श॒तप॑द्भिः॒ षळ॑श्वैः॥४॥**

ति॒स्रः। क्षपः॑। त्रिः। अहा॑। अ॒ति॒व्रज॑त्ऽभिः। नास॑त्या। भु॒ज्युं। ऊ॒ह॒थुः॒। प॒त॒ङ्गैः॥ स॒मु॒द्रस्य॑। धन्व॑न्। आ॒र्द्रस्य॑। पा॒रे। त्रि॒ऽभिः। रथैः॑। श॒तप॑त्ऽभिः। षट्ऽअ॑श्वैः॥ ४॥

हे नासत्यौ सेनया सहोदके निमग्नं भुज्युं तिस्रः क्षपस्त्रिसंख्याका रात्रीस्त्रिरहा त्रिवारमावृत्तानि त्र्यहानि चातिव्रजद्भिरतिक्रम्य गच्छद्भिरेतावंतं कालमतिव्याप्य वर्तमानैः पतंगैः पतद्भिस्त्रिभिस्त्रिसंख्याकै रथैरूहथुः युवामूढवंतौ। क्वेति चेत् उच्यते। समुद्रस्यांबुराशेर्मध्ये धन्वन् धन्वनि जलवर्जितप्रदेशे। आर्द्रस्योदकेनार्द्रीभूतस्य समुद्रस्य पारे तीरदेशे च। कथंभूतै रथैः। शतपद्भिः शतसंख्याकैश्चक्रलक्षणैः पादैरुपेतैः। षळश्वैः षड्भिरश्वैर्युक्तैः॥ तिस्रः। त्रिचतुरोः स्त्रियामिति त्रिशब्दस्य तिसृ आदेशः। स चांतोदात्तः। अचि र ऋत इति रेफादेश उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वम्। क्षपः। विभक्त्यंतस्य छांदसं ह्रस्वत्वम्। यद्वा शस्यात इति योगविभागादधातोरप्याकारलोपः। अहा। शेश्छंदसि बहुलमिति शेर्लोपः। पतंगैः। पत्लृ गतौ। पतेरंगच्। उ० १. ११८.। धन्वन्। धविर्गत्यर्थः। इदित्त्वान्नुम्। कनिन्युवृषीत्यादिना कनिन्। सुपां सुलुगिति सप्तम्या लुक्। शतपद्भिः। शतं पादा येषाम्। संख्यासुपूर्वस्येति पादशब्दस्यांत्य-

लोपः समासांतः। अयस्मयादित्वेन भत्वात्पादः पदिति पद्भावः। यद्वा पादसमानार्थः पच्छब्दः प्रकृत्यंतरं द्रष्टव्यम् ॥

अनारंभणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे। यदश्विना ऊहथुर्भुज्युमस्तं शतारित्रां नावमातस्थिवांसं ॥ ५ ॥

अनारंभणे। तत्। अवीरयेथां। अनास्थाने। अग्रभणे। समुद्रे ॥ यत्। अश्विनौ। ऊहथुः। भुज्युं। अस्तं। शतऽअरित्रां। नावं। आतस्थिऽवांसं ॥ ५ ॥

हे अश्विनौ। अनारंभण आलंबनरहिते समुद्रे तत्कर्मावीरयेथाम् विक्रांतं कृतवंतौ युवाम्। अनारंभणत्वमेव स्पष्टीकरोति। अनास्थाने। आस्थीयतेऽस्मिन्नित्यास्थानो भूप्रदेशः। तद्रहिते स्थातुमशक्ये जल इत्यर्थः। अग्रभणेऽग्रहणे। हस्तेन ग्राह्यं शाखादिकमपि यत्र नास्ति तस्मिन्नित्यर्थः। किं पुनस्तत्कर्म। भुज्युं समुद्रे मग्नं शतारित्रां बह्वरित्राम्। यैः काष्ठैः पार्श्वतो बद्धैर्जलालोडने सति नौः शीघ्रं गच्छति तान्यरित्राणि ईदृशां नावमातस्थिवांसमास्थितवंतमारूढवंतं कृत्वा॥ अस्तम्। गृहनामैतत्। पितुस्तुग्रस्य गृहं प्रति यदूहथुः। तत्प्रापणमन्यैर्दुःशक्यं युवां समुद्रमध्ये कृतवंतावित्यर्थः॥ अनारंभणे। आरभ्यत इत्यारंभणम्। कृत्यल्युटो बहुलमिति कर्मणि ल्युट्। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वम्। अवीरयेथाम्। शूर वीर विक्रांतौ। चुरादिरात्मनेपदी। अनास्थानाग्रभणयोः पूर्ववल्ल्युट्स्वरौ। अयं तु विशेषः। हृग्रहोर्भ इति भत्वम्। अस्तम्। अस्यतेऽस्मिन् सर्वमित्यस्तं गृहम्। असिहसीत्यादिना तन्प्रत्ययः। शतारित्राम्। ऋ गतौ। अर्तिलूधूसू इति करण इत्रप्रत्ययः बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्॥

यमश्विना ददथुः श्वेतमश्वमघाश्वाय शश्वदित्स्वस्ति। तद्वां दात्रं महि कीर्तेन्यं भूत्पैद्वो वाजी सदमिद्धव्यो अर्यः॥६॥

यं। अश्विना। ददथुः। श्वेतं। अश्वं। अघऽअश्वाय। शश्वत्। इत्। स्वस्ति॥ तत्। वां। दात्रं। महि। कीर्तेन्यं। भूत्। पैद्वः। वाजी। सदं। इत्। हव्यः। अर्यः॥ ६ ॥

अत्रेदमाख्यायते। पेदुर्नाम कश्चित् स चाश्विनौ तुष्टाव। तस्मै प्रीतौ कंचिच्छ्वेतवर्णमश्वं दत्तवंतौ। स चाश्वस्तस्मै प्रौढं जयं चकारेति। एतदत्र प्रतिपाद्यते। हे अश्विनौ युवामघाश्वायाहंतव्याश्वाय पेदुनाम्ने राजर्षये यं श्वेतवर्णमश्वं ददथुः दत्तवंतौ। सोऽश्वस्तस्मै स्वस्ति जयलक्षणं मंगलं शश्वदित् नित्यमेव चकार। वां युवयोस्तद्दात्रं दानं महि महत् अतिगंभीरम्। अतएव कीर्तेन्यं सर्वैः कीर्तनीयं

प्रशस्यं भूत् अभूत् । तस्मात्पैद्वः पेदोः संबंधी पतनशीलः शीघ्रगामी वार्यः शत्रूणां प्रेरयिता युद्धेषु प्रेरयितव्यो वा वाजी वेजनवान् सोऽश्वः सदमित् । सदैव हव्योऽस्माभिरप्याह्वातव्यः ॥ दात्रम् । ददातेर्भाव औणादिकस्त्रप्रत्ययः । महि । मह पूजायाम् । इन् सर्वधातुभ्य इतीन् । कीर्तेन्यम् । कृत संशब्दने । कृत्यार्थे तवैकेन्केन्यत्वन इति केन्यप्रत्ययः । ऋत इद्धातोरितीत्वम् । भूत् । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । पैद्वः । पेदोः संबंधी । तस्येदमित्यण् । छांदसो वर्णलोपः । हव्यः । ह्वयतेरचो यदिति यत् । बहुलं छंदसीति संप्रसारणम् । गुणः । धातोस्तन्निमित्तस्यैवेत्यवादेशः । अर्यः । ऋ गतौ । अर्यादयश्चेत्यौणादिको यत् । व्यत्ययेनांतोदात्तत्वम् ॥

युवं नरा स्तुवते पज्रियाय कक्षीवते अरदतं पुरंधिं । कारोतराच्छफादश्वस्य वृष्णः शतं कुंभाँ असिंचतं सुरायाः ॥७॥

युवं । नरा । स्तुवते । पज्रियाय । कक्षीवते । अरदतं । पुरंऽधिं ॥ कारोतरात् । शफात् । अश्वस्य । वृष्णः । शतं । कुंभान् । असिंचतं । सुरायाः ॥ ७ ॥

अत्रेयमाख्यायिका । कक्षीवानृषिः पुरा तमसा तिरोहितज्ञानः सन् ज्ञानार्थमश्विनौ तुष्टाव । तस्मा अश्विनौ प्रभूतां धियं दत्तवंताविति तदाह । हे नरा नेतारावश्विनौ युवं युवां पज्रियाय । पज्रा इत्यंगिरसामाख्या पज्रा वा अंगिरस इत्याम्नातत्वात् । तेषां कुले जाताय कक्षीवते । कक्ष्या रज्जुरश्वस्य तद्वते तत्संज्ञाय स्तुवते युवयोः स्तुतिं कुर्वते मह्यं पुरंधिं प्रभूतां धियं बुद्धिमरदतम् व्यलिखतम् । यथा सर्वार्थगोचरा भवति तथा कृतवंतावित्यर्थः । अपि च कारोतरात् कारोतरो नाम वैदलश्चर्मवेष्टितो भाजनविशेषो यस्मिन्सुरायाः स्रावणं क्रियते । लुप्तोपममेतत् । कारोतराद्यथा सुरायाः संपादकास्तां स्रावयंति एवमेव युवां वृष्णः सेचनसमर्थस्य युष्मदीयस्याश्वस्य शफात् खुरात् सुरायाः शतं कुंभान् असंख्यातान्सुराघटानसिंचतम् अक्षारयतम् । यद्वा सिंचतिः पूरणार्थः । कारोतरस्थानीयाद्युष्मदीयाश्वखुरात् या सुरा प्रवहति तयासंख्यातान् घटानसिंचतम् अपूरयतम् । ये जनाः सौत्रामण्यादिकर्मणि युष्मद्यागाय सुरां याचंते तेषामित्यर्थः ॥ स्तुवते । स्तौतेर्लटः शतृ । अदादित्वाच्छपो लुक् । शतुरनुम इति विभक्तेरुदात्तत्वम् । पज्रियाय । पज्रशब्दाच्छैषिको घच् । कक्षीवते । आसंदीवदष्ठीवच्चक्रीवत्कक्षीवदिति निपातनात् कक्ष्याशब्दस्य संप्रसारणं वत्वं च । अरदतम् । रद विलेखने । पुरंधिं । पुरंधिर्बहुधीरिति यास्कः । नि० ६. १३. । पृषोदरादित्वात्पुरंधिभावः । यद्वा पुरं पूरयितव्यं सर्वं विषयजातमस्यां धीयतेऽवस्थाप्यत इति पुरंधिर्बुद्धिः । कर्मण्यधिकरणे चेति दधातेः किप्रत्ययः । तत्पुरुषे कृति बहुलमिति बहुलवचनादलुक् । इदं

तु व्युत्पत्तिमात्रं वस्तुतः पृषोदरादिरेव । असिंचतम् । षिचिर् क्षरणे तौदादिकः । शे मुचादीनामिति नुम् ॥

**हि॒मेना॒ग्निं घ्रं॒सम॑वारयेथां पितु॒मती॒मूर्ज॑मस्मा अधत्तं ।**
**ऋ॒बीसे॒ अत्रि॑मश्वि॒नाव॑नीत॒मुन्नि॑न्यथुः॒ सर्व॑गणं स्व॒स्ति ॥ ८ ॥**

हि॒मेन॑ । अ॒ग्निं । घ्रं॒सं । अ॒वा॒र॒ये॒थां॒ । पि॒तु॒ऽमती॑ं । ऊर्जं॑ । अ॒स्मै॒ । अ॒ध॒त्तं॒ ॥ ऋ॒बीसे॑ । अत्रिं॑ । अ॒श्वि॒ना॒ । अव॑ऽनीतं । उत् । नि॒न्य॒थुः॒ । सर्व॑ऽगणं । स्व॒स्ति ॥ ८ ॥

अत्रेदमाख्यानम् । अत्रिमृषिमसुराः शतद्वारे पीडायंत्रगृहे प्रवेश्य तुषाग्निना-बाधिषत । तदानीं तेन ऋषिणा स्तुतावश्विनावग्निमुदकेनोपशमय्य तस्मात्पीडा-गृहादविकलेंद्रियवर्गं संतं निरगमयतामिति । तदेतत्प्रतिपाद्यते । हे अश्विनौ हि-मेन हिमवच्छीतेनोदकेन घ्रंसं दीप्यमानमत्रेर्बाधनार्थमसुरैः प्रक्षिप्तं तुषाग्निमवार-येथाम् युवां निवारितवंतौ । शीतीकृतवंताविल्यर्थः । अपि च । अस्मा असुरपी-डया कार्श्यं प्राप्तायात्रये पितुमतीम् । पितुरित्यन्ननाम । अन्नयुक्तमूर्जं बलप्रदं रसा-त्मकं क्षीरादिकमधत्तम् पुष्ट्यर्थं प्रायच्छतम् । ऋबीसेऽपगतप्रकाशे पीडायंत्र-गृहेऽवनीतमवाङ्मुखतयासुरैः प्रापितमत्रिं सर्वगणम् । गणः समूहः सर्वेषामिंद्रियाणां पुत्रादीनां वा गणेनोपेतं स्वस्ति अविनाशो यथा भवति तथोन्निन्यथुः तस्माद्गृहा-दुद्गमय्य युवां स्वगृहं प्रापितवंतौ । यद्वा । हिमेन शीतेन वृष्ट्युदकेनाग्निमग्निव-त्तीक्ष्णं घ्रंसम् । अहर्नामैतत् । सामर्थ्यान्निदाघकालीनमहरवारयेथाम् । तस्याह्न-स्तैक्ष्ण्यं निवारितवंतौ । अपि च । अस्मा अग्नये पितुमतीं चरुपुरोडाशादिलक्षणा-न्नोपेतमूर्जं बलकरं रसात्मकमुपस्तरणाभिघारणात्मकं घृतमधत्तम् । वृष्ट्युत्पादने-नाग्नेर्यागार्थं हवींषि निष्पादितवंतौ इत्यर्थः । ऋबीसेऽपगततेजस्के । पृथिवीद्रव्ये-ऽवनीतमोषधीनामुत्पादनायावस्तान्नीतम् । पार्थिवाग्निना परिपक्वा उदकेन क्लिन्ना ह्योषधिवनस्पतयो विरोहंति । अत्रिं हविषामत्तारमोषधिवनस्पत्यादीनां वा । एवंविधमग्निं सर्वगणं व्रीह्याद्योषधिगणोपेतं हे अश्विनौ युवां स्वस्ति अविनाशो यथा भवति तथोन्निन्यथुः व्रीह्याद्योषधिवनस्पतिरूपेण भूमेरुपरिष्टान्नीतवंतौ । कारणा-त्मना पार्थिवाग्नौ वर्तमानं सर्वमोषधिवनस्पत्यादिकमश्विनौ प्रकर्षेण व्यक्तीकृत-वंताविल्यर्थः । अयं पक्षो यास्केन हिमेनोदकेनेत्यादिनोक्तः । नि० ६. ३६. ॥ पितुमतीं । ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वम् । ऋबीसे । अत्र यास्कः । ऋबीसमपगतभासमपचितभासमपहृतभासमनंतर्हितभासं गतभासं वेति । नि० ६. ३५. । पृषोदरादित्वादभिमतरूपस्वरसिद्धिः । अत्रिम् । अद भक्षणे । अदेस्त्रिनिश्चेति चशब्दात्त्रिप् । अवनीतम् । गतिरनंतर इति गतेः प्रकृतिस्वरत्वम् । स्वस्ति । अस भुवि । भावे क्तिन् । छंदस्युभयथेति सार्वधातुकत्वादस्तेर्भूभावाभावः ॥

परावतं नासत्यानुदेथामुच्चाबुध्नं चक्रथुर्जिह्मबारं। क्षरन्नापो न पायनाय राये सहस्राय तृष्यते गोतमस्य ॥ ९ ॥

परा। अवतं। नासत्या। अनुदेथां। उच्चाऽबुध्नं। चक्रथुः। जिह्मऽबारं॥ क्षरन्। आपः। न। पायनाय। राये। सहस्राय। तृष्यते। गोतमस्य॥ ९ ॥

अत्रेदमाख्यानम्। कदाचिन्मरुभूमौ वर्तमानस्य स्तोतुर्गोतमस्य ऋषेः समीपं देशांतरे वर्तमानं कूपमुत्खायाश्विनौ प्रापयताम्। प्रापय्य च तं कूपं स्नानपानादिसौकर्यायोपरिमूलमधोबिलमवस्थापयतामिति तदेतदाह। हे नासत्या सत्यस्वभावौ सत्यस्य नेतारौ नासिकाप्रभवौ वा एतत्संज्ञावश्विनौ युवामवतम्। कूपनामैतत्। अवस्तात्ततं कूपं परानुदेथाम् गोतमस्य ऋषेः समीपे प्रेरिषाथाम्। तदनंतरं तं कूपमुच्चाबुध्नम् उच्चैरुपरिष्टाद्बुध्नो मूलं यस्य स तथोक्तः। जिह्मबारम्। जिह्ममधस्ताद्वर्तमानम् तथा वक्रं वारं द्वारं यस्य स तथोक्तः। एवंगुणविशिष्टं चक्रथुः युवामकृषाथाम्। तस्मात्कूपात्तृष्यते पिपासतो गोतमस्य पायनाय पानार्थमापो न आपश्च। अयं नशब्दश्चार्थे। क्षरन् प्रवाहरूपेण निरगमन्। कीदृशाय। राये हवींषि दत्तवतः। सहस्राय सहनशीलाय। यद्वा। सहस्रसंख्याकाय राये धनाय एतत्संख्यधनलाभार्थं चाक्षरन्॥ अनुदेथाम्। णुद प्रेरणे। तौदादिकः। जिह्मबारम्। द्वारशब्दस्य पृषोदरादित्वाद्बारादेशः। क्षरन्। क्षर संचलने। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। शपः पित्त्वादनुदात्तत्वम्। तिङो लसार्वधातुकस्वरेण धातुस्वरः। पायनाय। हेतुमण्णिच्। शाच्छासाह्वेति यक्। भावे ल्युट्। राये। रा दाने। राति ददातीति राः। रातेर्डैः। उ० २. ६५.। ऊडिदमिति विभक्तेरुदात्तत्वम्। तृष्यते। ञितृषा पिपासायाम्। श्यन् लटः शतृ। श्यनो नित्त्वादाद्युदात्तत्वम्। षष्ठ्यर्थे चतुर्थी वक्तव्येति चतुर्थी॥

जुजुरुषो नासत्योत वव्रिं प्रामुंचतं द्रापिमिव च्यवानात्। प्रातिरतं जहितस्यायुर्दस्रादित्पतिमकृणुतं कनीनां॥ १० ॥

जुजुरुषः। नासत्या। उत। वव्रिं। प्र। अमुंचतं। द्रापिंऽइव। च्यवानात्॥ प्र। अतिरतं। जहितस्य। आयुः। दस्रा। आत्। इत्। पतिं। अकृणुतं। कनीनां॥ १० ॥

अत्रेदमाख्यानम्। वलीपलितादिभिरुपेतो जीर्णांगः पुत्रादिभिः परित्यक्तश्च्यवनाख्य ऋषिरश्विनौ तुष्टाव। स्तुतावश्विनौ तस्मै ऋषये जरामपगमय्य पुनर्यौवनमकुरुतामिति तदेतदाह। हे नासत्यावश्विनौ जुजुरुषो जीर्णात् च्यवनात् च्यव-

नाख्यादृषेः सकाशाद्वव्रिं कृत्स्नं शरीरमावृत्यावस्थितां जरां प्रामुंचतम् प्रकर्षेणा- मोचयतम् । तत्र दृष्टांतः । द्रापिमिव । द्रापिरिति कवचस्याख्या । यथा कश्चित् कवचं कृत्स्नशरीरव्यापकं धृत्वा पश्चाच्छरीरात्पृथक्करोति तद्वत् । उत अपि च हे दस्रा एतत्संज्ञौ दर्शनीयौ वाश्विनौ जहितस्य पुत्रादिभिः परित्यक्तस्य ऋषेरायुर्जी- वनं प्रातिरतम् प्रावर्धयतम् । प्रपूर्वस्तिरतिर्वर्धनार्थः । आदित् अनंतरमेव यु- वानं संतं कनीनां कन्यानां पतिं भर्तारमकृणुतम् अकुरुतम् ॥ जुजुरुषः । जृष् वयोहानौ । लिटः क्वसुः । बहुलं छंदसीत्युत्वम् । द्विर्भावः । पंचम्येकवचने वसोः संप्रसारणमिति संप्रसारणम् । शासिवसिघसीनां चेति षत्वम् । वव्रिम् । वृञ् वरणे । आदृगमहन इति किप्रत्ययः । जहितस्य । ओहाक् त्यागे । कर्मणि निष्ठा । तस्य छंदस्युभयथेति सार्वधातुकत्वाद्यक् । तस्य बहुलं छंदसीति श्लुः । जहातेश्च । पा० ६. ४. ११६. । इतीत्वम् । कनीनाम् । रयेर्मतौ बहुलमिति बहुलवचनात्कन्याश- ब्दस्यात्र संप्रसारणम् ॥

**तद्वां॑ नरा॒ शंस्यं॒ राध्यं॑ चाभि॒ष्टिम॒न्नास॑त्या॒ वरू॑थं । य- द्वि॒द्वांसा॑ नि॒धिमि॒वाप॑गूळ्ह॒मुद्द॑र्श॒तादू॒पथु॒र्वंद॑नाय ॥ ११ ॥**

तत् । वां॒ । न॒रा॒ । शंस्य॑ । राध्य॑ । च॒ । अ॒भि॒ष्टि॒ऽमत् । ना॒स॒त्या॒ । वरू॑थं ॥ यत् । वि॒द्वांसा॑ । नि॒धिंऽइ॑व । अप॑ऽगूळ्हं । उत् । द॒र्श॒तात् । ऊ॒पथुः॑ । वंद॑नाय ॥ ११ ॥

अत्रेदमाख्यानम् । वंदनो नाम कश्चिदृषिः । स चासुरैः कूपे निखाय उत्तरीतु- मशक्नुवन्नश्विनावस्तौत् । तमश्विनौ कूपादुन्निन्यतुरिति तदाह । नरा आरोग्यस्य नेतारौ हे नासत्यावश्विनौ वां युवयोः संबंध्यभिष्टिमदभ्येषणयुक्तमाभिमुख्येन प्रा- प्तव्यं तथा वरूथं वरणीयं कामयितव्यं तत्कर्म शंस्यम् अस्माभिः प्रशंसनीयम् । राध्यं आराधनीयं च । किं पुनस्तत्कर्म । विद्वांसा जानंतौ युवां निधिमिव निक्षिप्तं धनमिवापगूळ्हमरण्ये निर्जने देशे कूपमध्येऽसुरैः निगूढं वंदनाय वंदनमृषिं दर्शता- दृष्वगैः पिपासुभिर्द्रष्टव्यात्कूपादुदूपथुः उदहार्ष्टम् । एवं यदेतत्कूपादुद्धरणं तदि- त्यर्थः ॥ शंस्यम् । शंसु स्तुतौ । अस्माण्ण्यन्तादचो यदिति यत् । यतोऽनाव इत्या- द्युदात्तत्वम् । अभिष्टिमत् । अभिपूर्वादिष गताविल्यस्माद्भावे क्तिन् । मंत्रे वृषेति क्तिन उदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते । शकंध्वादित्वात्पर- रूपत्वम् । तादौ चेति तु गतिस्वरस्य सर्वविधीनां छंदसि विकल्पितत्वात् अप्र- वृत्तिः । ततो मतुप् । अंतोदात्तादुत्तरस्य तस्य ह्रस्वनुड्भ्यामित्युदात्तत्वम् । वरू- थम् । जॄ वृञ्भ्यामूथन् । विद्वांसा । सुपां सुलुगिति विभक्तेराकारः । अपगूळ्हम् । गुहू संवरणे । कर्मणि निष्ठा । यस्य विभाषेतीट्प्रतिषेधः । ढत्वधत्वष्टुत्वढलोपदीर्घाः ।

गतिरनंतर इति गतेः प्रकृतिस्वरत्वम् । दर्शनात् । भृमृदृशीत्यादिनातच् । ऊपथुः । टुवप् बीजतंतुसंताने । लिट्यथुसि यजादित्वात्संप्रसारणम् । द्विर्वचनादि । वंदनाय । क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी ॥

तद्वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिं । दध्यङ्ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाच॥१२

तत् । वां । नरा । सनये । दंसः । उग्रं । आविः । कृणोमि । तन्यतुः । न । वृष्टिं ॥ दध्यङ् । ह । यत् । मधु । आथर्वणः । वां । अश्वस्य । शीर्ष्णा । प्र । यत् । ईं । उवाच ॥ १२ ॥

अत्रेयमाख्यायिका । इंद्रो दधीचे प्रवर्ग्यविद्यां मधुविद्यां चोपदिश्य यदीमामन्यस्मै वक्ष्यसि शिरस्ते छेत्स्यामीत्युवाच । ततोऽश्विनावश्वस्य शिरश्छित्त्वा दधीचेः शिरः प्रच्छिद्यान्यत्र निधाय तत्राश्व्यं शिरः प्रत्यधत्ताम् । तेन च दध्यङ् ऋचः सामानि यजूंषि च प्रवर्ग्यविषयाणि मधुविद्याप्रतिपादकं ब्राह्मणं चाश्विनावध्यापयामास । तदिंद्रो ज्ञात्वा वज्रेण तच्छिरोऽच्छिनत् । अथाश्विनौ तस्य स्वकीयं मानुषं शिरः प्रत्यधत्तामिति शाट्यायनवाजसनेययोः प्रपंचेनोक्तम् । तदेतत्प्रतिपाद्यते । नरा हे नरावश्विनौ वां युवयोः संबंध्युग्रमुद्गूर्णमन्यैर्दुःशकं दंसः । कर्मनामैतत् । युवाभ्यां पुरा कृतं तत्कर्म सनये धनलाभार्थमाविष्कृणोमि प्रकटीकरोमि । तत्र दृष्टांतः । तन्यतुर्न । यथा मेघस्थः शब्दो वृष्टिं मेघांतर्वर्तमानमुदकं प्रवर्षणेन सर्वत्र प्रकटयति तद्वत् । किं तत्कर्म । अथर्वणः पुत्रो दध्यङ् । एतत्संज्ञ ऋषिरश्वस्य शीर्ष्णा युष्मत्सामर्थ्येन प्रतिहितेन शिरसा वां युवाभ्यामीमिमां मधुविद्यां युद्धे यदा खलु प्रोवाच प्रोक्तवान् । तदानीमश्वस्य शिरसः संधानलक्षणं पुनर्मानुषस्य शिरसः प्रतिसंधानलक्षणं च यद्भवदीयं कर्म तदाविष्कृणोमीत्यर्थः ॥ सनये । षणु दाने । खनिकष्यंज्यसिवसिनिसनिध्वनिग्रंथिचरिभ्यश्चेतीप्रत्ययः । तन्यतुः । तनु विस्तारे । ऋतन्यंजीत्यादिनायतुच् । यद्वा स्तन शब्दे । बाहुलकायतुच् । छांदसः सलोपः । वृष्टिम् । वृष्यते सिच्यतेऽनेनेति वृष्टिः । मंत्रे वृषेत्यादिना क्तिन उदात्तत्वम् । अथर्वणः । आपत्यार्थेऽण्यन्निति प्रकृतिभावाट्टिलोपाभावः । शीर्ष्णा । शीर्षन् छंदसि । पा० ६. १. ६०. । इति शिरःशब्दपर्यायः शीर्षन्शब्दोऽन्तोदात्तो निपात्यते अल्लोपे सत्युदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् ॥

अजोहवीन्नासत्या करा वां महे यामन्पुरुभुजा पुरंधिः । श्रुतं तच्छासुरिव वध्रिमत्या हिरण्यहस्तमश्विनावदत्तं ॥१३॥

अजोहवीत् । नासत्या । करा । वां । महे । यामन् । पुरुऽभुजा । पुरंऽधिः ॥ श्रुतं । तत् । शासुःऽइव । वध्रिऽमत्याः । हिरण्यऽहस्तं । अश्विनौ । अदत्तं ॥ १३ ॥

वध्रिमती नाम कस्यचिद्राजर्षेः पुत्री नपुंसकभर्तृका । सा पुत्रलाभार्थमश्विनावाजुहाव । तदाह्वानं श्रुत्वाश्विनावागत्य तस्यै हिरण्यहस्ताख्यं पुत्रं ददतुः । तदेतदाह । पुरुभुजा बहूनां पालकौ प्रभूतहस्तौ वा हे नासत्यावश्विनौ महे महनीये पूजनीये यामन् यामनि । याति गच्छतीति यामन् स्तोत्रम् । तस्मिन्सति कराभिमतफलस्य कर्तारौ वां युवां पुरंधिर्बहुधीर्वध्रिमती । वध्रिः पुत्रोत्पादनाशक्तः पंडकः तद्वती । एतत्संज्ञा राजपुत्र्यजोहवीत् । पुनः पुनः स्तुत्वा पुत्रलाभार्थमाहूतवती । युवां च वध्रिमत्यास्तदाह्वानं श्रुतं शृणुतम् । तत्र दृष्टांतः । शासुरिव । यथा शासुराचार्यस्य वचनं शिष्योऽवहितः सन्नैकाग्र्येण शृणोति तद्वत् । श्रुत्वा च हे अश्विनौ तस्यै हिरण्यहस्तं सुवर्णमयपाणिं हितरमणीयपाणिं वा एतत्संज्ञं पुत्रमदत्तम् प्रायच्छतम् ॥ अजोहवीत् । ह्वयतेर्यङ्लुगंताल्लङ् । यङो वेति तिप ईडागमः । करा । करोतेः पचाद्यच् । सुपां सुलुगिति विभक्तेराकारः । यामन् । आतो मनिन्क्वनिब्वनिपश्चेति मनिन् । सुपां सुलुगिति सप्तम्या लुक् । श्रुतम् । लङि बहुलं छंदसीति विकरणस्य लुक् । बहुलं छंदस्यमाङ्योगेपीत्यडभावः । शासुः शास्तुः । शासु अनुशिष्टौ । शंसिशसिशासीत्यादिना संज्ञायां तृन् । इडभावः । छांदसस्तलोपः ॥

आस्नो वृकस्य वर्तिकामभीके युवं नरा नासत्यामुमुक्तं ।
उतो कविं पुरुभुजा युवं ह कृपमाणमकृणुतं विचक्षे ॥१४॥

आस्नः । वृकस्य । वर्तिकां । अभीके । युवं । नरा । नासत्या । अमुमुक्तं ॥ उतो इति । कविं । पुरुऽभुजा । युवं । ह । कृपमाणं । अकृणुतं । विऽचक्षे ॥ १४ ॥

वर्तिका चटकसदृशस्य पक्षिणः स्त्री । तामरण्ये वर्तमानेन शुना ग्रस्तां पुरा किलाश्विनावमोचयताम् तदेतदाह । हे नरा नेतारौ नासत्यावश्विनौ युवं युवामभीकेऽभिगते वृकवर्तिकयोः संग्रामे वृकस्य विकर्तकस्य शुन आस्नः आस्याद्वर्तिकां चटकसदृशीममुमुक्तम् अमोचयतम् । यास्कस्त्वाह । नि० ५. २१. । पुनः पुनर्वर्तते प्रतिदिवसमवर्तत इति वर्तिकोषाः । तां वृकेनावरकेन सर्वजगत्प्रकाशेनाच्छादयित्रा सूर्येण ग्रस्ताम् । उतो अपिच कविमृषिं हे पुरुभुजा बहुपालकौ युवंह युवामेव कृपमाणं संतं विचक्षे विविधं द्रष्टुमकृणुतमकुरुतम् ॥ आस्नः । पद्दन्नित्यादिनास्यस्यासन्नादेशः । अल्लोपोऽन इत्यकारलोपः उदात्तनिवृत्तिस्वरेणाङिदमिति विभक्-

रुदात्तत्वम् । अमुमुक्तम् । मुंचेरंतर्भावितण्यर्थाल्लङि बहुलं छंदसीति विकरणस्य श्लुः । कृपमाणं । कृपिः स्तुतिकर्मा तुदादिषु द्रष्टव्यः । विकरणस्वरे प्राप्ते वृषादीनां चेत्याद्युदात्तत्वम् । विचक्षे । तुमर्थे सेसेनिति सेन्प्रत्ययः । स्कोः संयोगाद्योरिति सलोपः ॥

चरित्रं हि वेरिवाच्छेदि पर्णमाजा खेलस्य परितक्म्यायां।
सद्यो जंघामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तं॥१५॥

चरित्रं । हि । वेःऽइव । अच्छेदि । पर्णं । आजा । खेलस्य । परिऽतक्म्यायां ॥ सद्यः । जंघां । आयसीं । विश्पलायै । धने । हिते । सर्तवे । प्रति । अधत्तं ॥ १५ ॥

अगस्त्यपुरोहितः खेलो नाम राजा । तस्य संबंधिनी विश्पला नाम स्त्री संग्रामे शत्रुभिश्छिन्नपादासीत् । पुरोहितेनागस्त्येन स्तुतावश्विनौ रात्रावागत्यायोमयं पादं समधत्ताम् । तदेतदाह । आजा आजौ संग्रामेऽगस्त्यपुरोहितस्य खेलस्य संबंधिन्या विश्पलाख्यायाश्चरित्रं चरणं वेरिव वेः पक्षिणः पर्णं पतत्रमिवाच्छेदि हि पुरा छिन्नमभूत्खलु । हे अश्विनौ युवामगस्त्येन स्तुतौ संतौ परितक्म्यायाम् । परितक्म्या रात्रिः परित एनां तकतीति यास्कः । नि० ११. २५. एनामुभयतः सूर्यो गच्छतीति तस्यार्थः । रात्रावागत्य सद्यस्तदानीमेव हिते शत्रुषु निहिते धने जेतव्ये विषयभूते सति सर्तवे सर्तुं गंतुं विश्पलाया आयसीमयोमयीं जंघां जंघोपलक्षितं पादं प्रत्यधत्तम् । संधानमेकीकरणं कृतवंताविल्यर्थः ॥ चरित्रम् । अर्तिलूधूसूखनसहचरइत्र इति करण इत्रः । आजा । सुपां सुलुगिति विभक्तेर्डादेशः । आयसीम् । अयःशब्दाद्विकारार्थे प्राणिरजतादिभ्योऽञ् । पा० ४. ३. १५४. । टिड्ढाणञिति ङीप् ॥

शतं मेषान्वृक्ये चक्षदानमृज्राश्वं तं पितांधं चकार ।
तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन् १६

शतं । मेषान् । वृक्ये । चक्षदानं । ऋज्रऽअश्वं । तं । पिता । अंधं । चकार ॥ तस्मै । अक्षी इति । नासत्या । विऽचक्षे । आ । अधत्तं । दस्रा । भिषजौ । अनर्वन् ॥ १६ ॥

वृषागिरः पुत्र ऋज्राश्वो नाम राजर्षिः । तस्य समीपेऽश्विनोर्वाहनभूतो रासभो वृकीभूत्वावतस्थे । स च तस्या आहारार्थमेकोत्तरशतसंख्याकान् पौरजनानां स्वभूतान्मेषान् शकलीकृत्य प्रददौ । ऋज्राश्वः शतमेकं च मेषानिति मंत्रांतरे दर्शनात् । एवं पौराणामहिते प्रवृत्तं पिता शापेन नेत्रहीनमकरोत् । तेन स्तूयमानावश्विनामस्माद्वाहननिमित्तमस्यांधता जातेति मत्वा तौ तस्मै अक्षिणी प्रायच्छतामिति तदे-

तदाह । अत्र तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । य ऋज्राश्वः शतं शतसंख्याकान्मेषान्वृक्य आत्मना पोषितायै वृकस्त्रियै शकलीकृत्य प्रादात् । तं चक्षदानम् । क्षदतिरत्तिकर्मात्र शकलीकरणार्थः । शकलीकृत्य दत्तवंतं ऋज्राश्वं पिता शापेनांधं दृष्टिहीनं चकार कृतवान् । हे नासत्या सत्यस्वभावौ सत्यस्य नेतारौ वा भिषजौ देवानां वैद्यभूतौ । अश्विनौ वै देवानां भिषजाविति श्रुतेः । दस्रा दर्शनीयावेतत्संज्ञौ वा हे अश्विनौ । अनर्वन् अनर्वणी द्रष्टव्यं प्रति पितृशापाद्गमनरहिते अक्षी चक्षुषी विचक्षे विविधं द्रष्टुं समर्थे तस्मै ऋज्राश्वायाधत्तं व्यधत्तम् अकुरुतम् । वृक्ये । वृकोऽरण्यश्वा । तस्य स्त्री वृकी । जातेरस्त्रीविषयादिति ङीप् । जसादिषु छंदसि वा वचनमिति चतुर्थ्येकवचनस्याडभावे यणादेश उदात्तस्वरितयोर्यण इति परस्यानुदात्तस्य स्वरितत्वम् । चक्षदानम् । क्षदेर्लिटः कानच् । चित्स्वरः । अक्षी । इच द्विवचन इति परत्वादक्षशब्दस्येकारांतादेशः स चोदात्तः । तस्मिन्कृते सकृद्गतौ विप्रतिषेध इति परिभाषया पुनर्नुम् न भवति । विचक्षे । चक्षेः संपदादिलक्षणो भावे क्विप् । अनर्वन् । ऋ गतौ । अस्मादन्येभ्योऽपि दृश्यंत इति दृशिग्रहणस्य विध्यंतरोपसंग्रहार्थत्वाद्भावे वनिप् । अर्व गमनं विषयं प्रत्यनयोर्नास्तीति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वम् । सुपां सुलुगिति द्विवचनस्य लुक् । छांदसो नलोपाभावः ॥

आ वां रथं दुहिता सूर्यस्य कार्ष्मेवातिष्ठदर्वता जयंती ।
विश्वे देवा अन्वमन्यंत हृद्भिः समु श्रिया नासत्या सचेथे १७

आ । वां । रथं । दुहिता । सूर्यस्य । कार्ष्मऽइव । अतिष्ठत् । अर्वता । जयंती ॥ विश्वे । देवाः । अनु । अमन्यंत । हृत्ऽभिः । सं । ऊं इति । श्रिया । नासत्या । सचेथे इति ॥ १७ ॥

सविता स्वदुहितरं सूर्याख्यां सोमाय राज्ञे प्रदातुमैच्छत् । तां सूर्यां सर्वे देवा वरयामासुः । तेऽन्योन्यमूचुः । आदित्यमवधिं कृत्वाजिं धावाम योऽस्माकं मध्य उज्जेष्यति तस्येयं भविष्यतीति । तत्राश्विनावुदजयताम् । साच सूर्या जितवतोस्तयो रथमारुरोह । अत्र प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छदित्यादिकं ब्राह्मणमनुसंधेयम् । इदं चाख्यानं सूर्याविवाहस्य स्तावकेन सत्येनोत्तभिता भूमिरिति सूक्तेन विस्पष्टयिष्यते । हे अश्विनौ वां युवयो रथं कार्ष्मेव । कार्ष्मशब्दः काष्ठवाची । यथा काष्ठमाजिधावनस्यावधितया निर्दिष्टं लक्ष्यमाशुगामी कश्चित्सर्वेभ्यो धावद्भ्यः पूर्वं प्राप्नोति । एवमेव सर्वेभ्यो देवेभ्यः पूर्वमर्वता शीघ्रमवधिं प्राप्नुवता युष्मदीयेनाश्वेन करणभूतेन युवाभ्यां जयंती जीयमाना सूर्यस्य सवितुर्दुहितातिष्ठत् आरूढवती । विश्वे सर्वे इतरे देवा एतदारोहणमन्वमन्यंत हृद्भिर्हृदयैः

रन्वमन्यंत अन्वजानन् तदानीं हे नासत्यावश्विनौ श्रिया ऋक्सहस्रलाभरूपया संपदा कांत्या वा युवां संसचेथे संगच्छेथे ॥ जयंती व्यत्ययेन कर्मणि शतृप्रत्ययः। हृद्भिः। पद्दन्नित्यादिना हृदयशब्दस्य हृद्भावः। सचेथे। षच समवाये। स्वरितेत्त्वादात्मनेपदम् ॥

यदयातं दिवोदासाय वर्तिर्भरद्वाजायाश्विना हयंता। रेवदुवाह सचनो रथो वां वृषभश्च शिंशुमारश्च युक्ता ॥१८॥

यत्। अयातं। दिवःऽदासाय। वर्तिः। भरत्ऽवाजाय। अश्विना। हयंता॥ रेवत्। उवाह। सचनः। रथः। वां। वृषभः। च। शिंशुमारः। च। युक्ता॥ १८॥

हे अश्विनौ हयंता स्तुतिभिराहूयमानौ युवां भरद्वाजाय संभ्रियमाणहविर्लक्षणान्नाय यजमानाय दिवोदासायैतत्संज्ञाय राजर्षयेऽभीष्टं फलं दातुं वर्तिस्तदीयं गृहं यद्यदायातम् अगच्छतम्। तदानीं रेवद्धनयुक्तमन्नं वां युवयोः सचनः सेवनो रथ उवाह तस्मै दिवोदासाय प्रापयामास। अपि च तस्मिन्रथे वृषभोऽनड्वान् शिंशुमारो ग्राहश्च परस्परविरुद्धावपि स्वसामर्थ्यप्रकटनाय युक्ता वाहनतया संयुक्तावास्ताम् ॥ दिवोदासाय। दिवश्च दासे षष्ठ्या अलुग्वक्तव्य इत्यलुक्। दिवोदासादीनां छंदस्युपसंख्यानमिति पूर्वपदाद्युदात्तत्वम्। भरद्वाजाय। भृञ् भरणे। अस्माद्व्यत्ययेन कर्मणि शतृप्रत्ययः। शतुश्छंदस्युभयथेत्यार्द्धधातुकत्वेन लसार्वधातुकानुदात्तत्वाभावात् प्रत्ययाद्युदात्तत्वम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। हयंता। ह्वेञः कर्मणि लटो व्यत्ययेन शतृ। बहुलं छंदसीति संप्रसारणम्। शपि गुणे छांदसोऽयादेशः। रेवत्। रयिशब्दान्मतुप्। रयेर्मतौ बहुलमिति संप्रसारणम्। छंदसीर इति मतुपो वत्वम्। रयिशब्दाच्चेति मतुप उदात्तत्वम्। सचनः। षच सेवने अनुदात्तेतश्च हलादेरिति युच्। युक्ता। सुपां सुलुगिति विभक्तेराकारः॥

रयिं सुक्षत्रं स्वपत्यमायुः सुवीर्यं नासत्या वहंता। आ जह्नावीं समनसोप वाजैस्त्रिरह्नो भागं दधतीमयातं॥ १९॥

रयिं। सुऽक्षत्रं। सुऽअपत्यं। आयुः। सुऽवीर्यं। नासत्या। वहंता॥ आ। जह्नावीं। सऽमनसा। उप। वाजैः। त्रिः। अह्नः। भागं। दधतीं। अयातं॥ १९॥

हे नासत्यावश्विनौ सुक्षत्रं शोभनबलं रयिं धनं स्वपत्यं शोभनैः पुत्रादिभिरुपेतम्। सुवीर्यं शोभनवीर्योपेतमायुः। अन्नमेतत्। एवंगुणविशिष्टमन्नं च वहंता

धारयंतौ युवां समनसा समानमनस्कौ संतौ जह्नावीं जह्नोर्महर्षेः संबंधिनीं प्रजामायातम् आभिमुख्येनागच्छतम् ॥ कीदृशीम् । वाजैर्हविर्लक्षणैरन्नैरुपेताम् । अह्नः । अत्राह्नःशब्देन तत्रानुष्ठेयः सोमयागो लक्ष्यते । तस्य प्रातःसवनादिरूपेण त्रिधा विभक्तं भागमंशं दधतीं बिभ्रतीम् । अनुसवनं हविर्भिर्यजमानामित्यर्थः ॥ सुक्षत्रम् । बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वम् । सुवीर्यम् । वीरवीर्यौ चेति बहुव्रीहावुत्तरपदाद्युदात्तत्वम् । जह्नावीम् । जह्नुशब्दात्तस्येदमित्यर्थेऽण् टिड्ढाणञिति ङीप् । जाह्नवी ह्रस्वदीर्घयोर्विनिमयः पृषोदरादित्वात् । उक्तं च । वर्णागमो वर्णविपर्ययश्चेति । अत एव मध्योदात्तत्वम् ॥

परिविष्टं जाहुषं विश्वतः सीं सुगेभिर्नक्तमूहथू रजोभिः ।
विभिंदुना नासत्या रथेन वि पर्वताँ अजरयू अयातं ॥ २० ॥

परिऽविष्टं । जाहुषं । विश्वतः । सीं । सुऽगेभिः । नक्तं । ऊहथुः । रजःऽभिः ॥ विऽभिंदुना । नासत्या । रथेन । वि । पर्वतान् । अजरयू इति । अयातं ॥ २० ॥

जाहुषो नाम कश्चिद्राजा । विश्वतः सर्वतः परिविष्टं शत्रुभिः परिवृतं तं राजानं हे नासत्यावश्विनावजरयू जरारहितौ नित्यतरुणौ युवां विभिंदुना विशेषेण सर्वस्य भेदकेनात्मीयेन रथेन नक्तं रात्रौ सुगेभिः सुष्ठु गंतुं शक्यै रजोभी रंजकैर्मार्गैरूहथुः । तस्माच्छत्रुसमूहान्निरगमयतम् । सीमित्येतत्पदं पादपूरणम् । निर्गतेन तेन सह पर्वतान् शत्रुभिरारोढुमशक्यान् शिलोच्चयान्व्ययातम् विशेषेणागच्छतम् ॥ परिविष्टम् । विश प्रवेशने । कर्मणि निष्ठा । गतिरनंतर इति गतेः प्रकृतिस्वरत्वम् । सुगेभिः । सुदुरोरधिकरण इति गमेर्डः । विभिंदुना । भिदिर् विदारणे । औणादिक उप्रत्ययो नुमागमश्च । अजरयू । न जरा अजरा । तामात्मन इच्छतीति सुप आत्मनः क्यच् । न छंदस्यपुत्रस्येतीत्वदीर्घयोर्निषेधः । क्याच्छंदसीत्युप्रत्ययः ॥

एकस्या वस्तोरावतं रणाय वशमश्विना सनये सहस्रा ।
निरहतं दुच्छुना इंद्रवंता पृथुश्रवसो वृषणावरातीः ॥ २१ ॥

एकस्याः । वस्तोः । आवतं । रणाय । वशं । अश्विना । सनये । सहस्रा ॥ निः । अहतं । दुच्छुनाः । इंद्रऽवंता । पृथुऽश्रवसः । वृषणौ । अरातीः ॥ २१ ॥

हे अश्विनौ वशमेतत्संज्ञमृषिमेकस्या वस्तोरेकस्याह्नो रणाय रमणीयाय सहस्रा सहस्रसंख्याकाय सनये धनलाभायावतम् अरक्षतम् । स ऋषिः प्रत्यह यथा सह-

त्वसंख्यं धनं लभते तथा रक्षितवंतौ इत्यर्थः। अपि च हे वृषणौ कामानां वर्षितारावश्विनौ । इंद्रवंता इंद्रेण संयुक्तौ युवां दुच्छुना दुष्टसुखान् दुःखस्य कर्तॄन् पृथुश्रवसो विस्तीर्णयशसोऽरातीः शत्रूनिरहतम् निःशेषेणावधिष्टम् । यद्वा कानीनस्य पृथुश्रवःसंज्ञस्य राज्ञः शत्रूनिति योज्यम् ॥ सहस्रा । सुपां सुलुगिति चतुर्थ्या डादेशः । अहतम् । लङि थसस्तन् । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः । दुच्छुनाः । शुनमिति सुखनाम । दुष्टं सुखं यासां तास्तथोक्ताः । परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वम् ॥

शरस्य चिदार्चत्कस्यावतादा नीचादुच्चा चक्रथुः पातवे वाः । शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गाम् २२

शरस्य । चित् । आर्चत्ऽकस्य । अवतात् । आ । नीचात् । उच्चा । चक्रथुः । पातवे । वारिति वाः ॥ शयवे । चित् । नासत्या । शचीभिः। जसुरये । स्तर्यं । पिप्यथुः । गां ॥ २२ ॥

आर्चत्कस्य ऋचत्कपुत्रस्य शरस्यैतत्संज्ञस्यापि स्तोतुः पिपासितस्य पातवे पानार्थं नीचान्नीचीनादवतात्कूपादुच्चा उच्चैरुपरिष्टाद्वारुदकं हे अश्विनौ युवामाचक्रथुः आभिमुख्येन कृतवंतौ । तथा हे नासत्यावश्विनौ शचीभिर्युष्मदीयैः कर्मभिः परिचरणैर्जसुरये श्रांताय शयवे चित् शयुनाम्ने ऋषये स्तर्यं निवृत्तप्रसवां गामग्निहोत्रार्थस्य पयसो दोग्ध्रीं पिप्यथुः । पयसा युवामापूरितवंतौ । पातवे । पा पाने । तुमर्थे सेसेनिति तवेन्प्रत्ययः । जसुरये । जसु हिंसायाम् । जसिसहोरुरिन् । उ० २-७२. । स्तर्यम् । स्तीर्यत आच्छाद्यते प्रसवसामर्थ्याभावेनेति स्तरीः । अवितॄस्तृतंत्रिभ्य ईरितीकारप्रत्ययः । वा छंदसीत्यमि पूर्वत्वस्य विकल्पितत्वादभावे यणादेशः । उदात्तस्वरितयोर्यण इति परस्यानुदात्तस्य स्वरितत्वम् । पिप्यथुः । प्यायी वृद्धौ । लिटि व्यत्ययेन परस्मैपदम् । लिड्यङोश्च । पा० ६. १. २९. । इति पीभावः ॥

अवस्यते स्तुवते कृष्णियाय ऋजूयते नासत्या शचीभिः । पशुं न नष्टमिव दर्शनाय विष्णाप्वं ददथुर्विश्वकाय ॥ २३ ॥

अवस्यते । स्तुवते । कृष्णियाय । ऋजुऽयते । नासत्या । शचीभिः ॥ पशुं । न । नष्टंऽइव । दर्शनाय । विष्णाप्वं । ददथुः । विश्वकाय ॥ २३ ॥



अवस्यते रक्षणमात्मन इच्छते स्तुवते स्तुतिं कुर्वते कृष्णियाय । कृष्णो

नाम कश्चित् तस्य पुत्राय ऋजूयत आर्जवमिच्छते विश्वकायैतत्संज्ञाय कृपये हे नासत्यौ युवां शचीभिरात्मीयैः कर्मभिर्विष्णाप्वं नाम विनष्टं पुत्रं दर्शनाय दर्शनार्थं ददथुः दत्तवंतौ। तत्र दृष्टांतः। पशुं न नष्टमिव। एक उपमार्थीयः पूरकः। यथा कश्चिद्विनष्टं पशुं स्वामिनो दृष्टिपथं प्रापयति तद्वत्॥ अवस्यते। अवस्शब्दात्सुप आत्मनः क्यच्। शतुरनुम इति विभक्तेरुदात्तत्वम्। कृष्णियाय। कृष्णशब्दादपत्यार्थे छांदसो घच्॥

दश॒ रात्री॒रशि॑वेना॒ नव॒ द्यूनव॑नद्धं श्नथि॒तम॒प्स्व१॒॑न्तः।
विप्रु॑तं रे॒भमु॒दनि॒ प्रवृ॑क्त॒मुन्नि॑न्यथुः॒ सोम॑मिव स्रु॒वेण॑॥ २४॥

दश॑। रात्रीः॑। अशि॑वेन। नव॑। द्यून्। अव॑ऽनद्धं। श्नथि॒तं। अ॒प्ऽसु। अ॒न्तरिति॑॥ विऽप्रु॑तं। रे॒भं। उ॒दनि॑। प्रऽवृ॑क्तं। उत्। नि॒न्य॒थुः॒। सोम॑ऽइव। स्रु॒वेण॑॥ २४॥

पुरा खलु रेभमृषिं पाशैर्बद्ध्वासुराः कूपे कस्यचिद्दिवसस्य सायंकाले प्रचिक्षिपुः। स चाश्विनौ स्तुवन् दश रात्रीर्नवाहानि च कूपमध्ये तथैवावतस्थे। दशमेऽहनि प्रातरश्विनौ तं कूपादुदतारयतामिति तदाह। अप्सु कूपांतर्वर्तमानास्वंतर्मध्येऽसुरैः पातितमशिवेन दुःखहेतुना दाम्नावनद्धं बद्धं श्नथितं शत्रुभिर्हिंसितं दश रात्रीर्दशसंख्याका निशाः नव द्यून् नवसंख्याकान्यहानि च। अत्यंतसंयोगे द्वितीया। एतावंतं कालं तत्रैव कूपेऽवस्थितम्। अत एवोदन्युदके विप्रुतं विप्लुतं व्याक्षिप्तसर्वांगम्। प्रवृक्तम्। लुप्तोपममेतत्। प्रवृंजनेन संतप्तं घर्ममिव व्यथया संतप्यमानम्। एवंभूतं रेभं हे अश्विनौ युवामुन्निन्यथुः तस्मात्कूपादुन्नीतमुत्तीर्णं कृतवंतौ। तत्र दृष्टांतः। सोममिव। यथाग्निहोत्रहोमार्थमभिषुतं सोमरसं कूपसदृशेऽग्निहोत्रस्थालीमध्ये वर्तमानं स्रुवेणाध्वर्युरुन्नयत्यूर्ध्वं नयति तद्वत्। अवनद्धम्। णह बंधने कर्मणि निष्ठा। नहो धः। पा० ८. २. ३४.। झषस्तथोर्धोऽध इति निष्ठातकारस्य धत्वम्। गतिरनंतर इति गतेः प्रकृतिस्वरत्वम्। श्नथितम्। श्नथ हिंसार्थः। निष्ठा। विप्रुतम्। प्रुङ् गतौ। अवनद्धवत्प्रत्ययस्वरौ। कपिलकादित्वाल्लत्वविकल्पः। उदनि। पद्दन्नित्यादिनोदकशब्दस्योदन्भावः॥

प्र वां॒ दंसां॑स्यश्विनाववोचम॒स्य पतिः॑ स्यां सु॒गवः॑ सु॒वीरः॑।
उ॒त पश्य॑न्नश्नु॒वन्दी॒र्घमायु॒रस्त॑मि॒वेज्ज॑रि॒माणं॑ जगम्यां॥ २५॥

प्र। वां॒। दंसां॑सि। अ॒श्वि॒नौ॒। अ॒वो॒च॒म्। अ॒स्य। पतिः॑। स्यां॒। सु॒ऽगवः॑। सु॒ऽवीरः॑॥ उ॒त। पश्य॑न्। अ॒श्नु॒वन्। दी॒र्घं। आयुः॑। अस्तं॑ऽइव। इत्। ज॒रि॒माणं॑। ज॒ग॒म्यां॒॥ २५॥

एवमनेन सूक्तेनाश्विनोर्महिमानं प्रशस्याधुना मंत्रद्रष्टा स्वाभीष्टं प्रार्थयते । हे अश्विनौ वां युवयोर्दंसांसि पुरु कृतानि कर्माणि प्रावोचं इत्थमुक्तवानस्मि सोऽहं सुगवः शोभनगोयुक्तः सुवीरः शोभनवीरश्च भूत्वा अस्य राष्ट्रस्य पतिरधिपतिः स्यां भवेयम् । उत अपि च पश्यन् । अक्षिभ्यां पश्यन् । उपलक्षणमेतत् । सर्वैरिंद्रियैः स्वस्वविषयदर्शनसमर्थैर्दीर्घं वर्षशतरूपेणायतं आयुर्जीवितं चाश्नुवन्प्राप्नुवन्नहं अस्तमिवेत् यथा गृहं स्वामी निष्कंटकं प्रविशति एवं जरिमाणं जरां जगम्यां कंटकराहित्येन प्राप्नुयां । वृद्धः संश्चिरकालं निवसेयमित्यर्थः । स्याम् । अस्तेः प्रार्थनायां लिङ् यासुट् । श्नसोरल्लोप इत्यकारलोपः । अश्नुवन् । अशू व्याप्तौ । व्यत्ययेन शतृ । जरिमाणम् । जॄष् वयोहानौ । अस्मादौणादिक इमनिच् प्रत्ययः । जगम्याम् । गमेः प्रार्थनायां लिङि बहुलं छंदसीति विकरणस्य श्लुः ॥

---

## (मं० १ सू० १८४.)

## ६.

**ता वा॒मद्य ताव॑प॒रं हु॑वेमो॒च्छंत्या॑मु॒षसि॒ वह्नि॑रु॒क्थैः ।**
**नास॑त्या॒ कुह॑ चि॒त्संता॑व॒र्यो दि॒वो नपा॑ता सु॒दास्त॑राय ॥ १ ॥**

ता । वा॒ं । अ॒द्य । तौ । अ॒प॒रं । हु॒वे॒म । उ॒च्छंत्या॑ं । उ॒षसि॑ । वह्नि॑ः । उ॒क्थैः ॥ नास॑त्या । कुह॑ । चि॒त् । संतौ॑ । अ॒र्यः । दि॒वः । नपा॑ता । सु॒दाः॒ऽत॑राय ॥ १ ॥

ता तौ रक्षकत्वेन प्रसिद्धौ वां युवामद्यास्मिन्यागदिने हुवेम आह्वयाम इत्याशीः । तथापरमपरस्मिन्नपि दिने तौ युवां हुवेम । अपरमित्येतदपरस्मिन्नित्यर्थे समभिव्याहारात् । अद्या च नो मृळयतापरं चेत्यादिमंत्रांतरे तथा दर्शनाच्च । अपरयागं प्रत्यपीति वा । कस्मिन्काले । उषस्युषोदेवतायामुच्छंत्यां तमो विवासयंत्यां सत्यां । उषःकाले हि प्रातरनुवाकाश्विनशस्त्रे प्रयुज्येते । उक्ते काले हे नासत्या असत्यरहितौ दिवो नपाता द्युलोकस्य न पातयितारौ नमृस्थानीयौ वा कुहचित्संतौ कुत्रचिद्देशे वर्तमानौ युवां वह्निः स्तुतेर्वोढार्य ईरयिता स्तुतेरीश्वरो वा इंद्रशोऽहं होता सुदास्तरायात्यर्थं शोभनहविर्दात्रे यजमानाय तदर्थं तौ युवामुक्थैः शस्त्रैर्हुवेमेति संबंधः । अत्राख्यातं पदमेकवचनतया नेतव्यं । वह्निरर्यशब्दौ वा बहुवचनत्वेन नेतव्यौ । अथवा वाक्यद्वयं । यस्माद्वह्निरर्यौ होतोक्तगुणकौ युवां शंसति तस्माद्द्वयं यजमानार्थौ [illegible] युवामाह्वयाम इति ॥

**अस्मे ऊ षु वृषणा मादयेथामुत्पणीँर्हतमूर्म्या मदन्ता ।**
**श्रुतं मे अच्छोक्तिभिर्मतीनामेष्टा नरा निचेतारा च कर्णैः २**

अस्मे इति । ऊं इति । सु । वृषणा । मादयेथां । उत् । पणीन् । हतं । ऊर्म्या । मदन्ता ॥ श्रुतं । मे । अच्छोक्तिऽभिः । मतीनां । एष्टा । नरा । निऽचेतारा । च । कर्णैः ॥ २ ॥

हे वृषणा कामानां वर्षकावश्विनौ युवामस्मे उ अस्मास्वेव सु मादयेथां सुष्ठु तृप्यतं अस्मभ्यं तर्पयतमभिमतं । तथा पणीन् वणिजो लुब्धकानयष्टॄन् उत् उन्मूल्य हतं नाशयतं । कीदृशौ युवां । ऊर्म्या । रात्रिनामैतत् । रात्रौ मदन्ता माद्यंतौ । यद्वा ऊर्मिरिति सोमनाम । ऊर्मिर्यस्ते पवित्र आ (९-६४-११) इत्यादिषु तथा प्रयोगात् । अस्मदीयेन सोमेन मदंतौ । तादृशौ युवां मे ममाच्छोक्तिभिराभिमुख्यकरैर्निर्मलवेदवाक्यैरंचिता मतीनां । कर्मणि षष्ठी । मननसाधनाः स्तुतीः कर्णैराकर्णनसाधनैः श्रोत्रैः श्रुतं शृणुतं । हे नरा नेतारौ युवां खल्वेष्टा अन्वेष्टारावस्मत्स्तुतीनां । तथा निचेतारा लब्धानां तासां संचयकर्तारौ । निरित्येष समित्येतस्य स्थाने । यस्मादेवंविधौ तस्माच्छृणुतमिति ॥

**श्रिये पूषन्निषुकृतेव देवा नासत्या वहतुं सूर्यायाः ।**
**वच्यन्ते वां ककुहा अप्सु जाता युगा जूर्णेव वरुणस्य भूरेः ३**

श्रिये । पूषन् । इषुकृताऽइव । देवा । नासत्या । वहतुं । सूर्यायाः ॥ वच्यंते । वां । ककुहाः । अप्ऽसु । जाताः । युगा । जूर्णाऽइव । वरुणस्य । भूरेः ॥ ३ ॥

सविता सूर्यो दुहितरं सूर्याख्यां प्रदातुमना देवानाहूय सामर्थ्यसमीक्षणायाजिं परिकल्प्य य इमं जेष्यति स एषां कन्यकामृक्सहस्रकॢप्तं स्तोत्रं च लभत इत्यकल्पयत् । तमग्निः प्रथममजयत् तमन्वश्विनावपि जित्वाग्निं प्रधृष्य ऋक्सहस्रं कन्यकां चालभेतां । तत इंद्र उषाश्चाजयतां । तौ च तैरग्न्यादिभिः प्रार्थितौ स्वशस्त्रस्य कंचित्कंचिद्भागं तेभ्यः परिकल्प्य सूर्यां स्वरथेऽधारयतामिति । अयमितिहासो ब्राह्मणे प्रजापतिर्वै सोमाय राज्ञ इत्यत्राम्नातोऽस्माभिः प्रथमाष्टके । १. ८. २०. ५. । आ वां पतित्वं सख्यायेत्यत्र प्रपंचितः । तत्राह । हे पूषन् पोषक सूर्य । एतच्चंद्रस्याप्युपलक्षणं सूर्याचंद्रमसोरेवाश्वित्वात् । सूर्याचंद्रमसावित्येक इति यास्केनोक्तत्वात् । अतः पूषन्नित्युक्ते हे पोषकावश्विनावित्युक्तं भवति । हे पोषकौ हे नासत्या असत्यरहितौ देवौ देवौ युवां श्रिये श्रेयसे शस्त्रस्य कन्यायाश्च प्राप्तये ... इषुकृते

व । इवशब्द एवार्थे । आजिधावनायेषुवच्छीघ्रमृजुगामिनौ कृतावेव संतौ सूर्याया एतन्नामिकायाः सवितुः पुत्र्याः । कर्मणि षष्ठी । सूर्यां वहतुं रथे धारयितुमाजिमुदजयतामित्यर्थः । यस्मादेवं तस्मादप्सु जाताः कर्मसु संपादिताः ककुहाः शस्त्ररूपाः स्तुतयो भूरेरविच्छिन्नप्रवाहस्य वरुणस्य फलप्रतिबंधकपापनिवारकस्य यागस्य सिद्ध्यर्थं तत्संबंधिन्यो वां प्रति वच्यंते उच्यंते होत्रादिभिः । युवामेव शस्त्रगतमंत्रैर्यागकाले च स्तुवंतीत्यर्थः । युगा जूर्णेव । जीर्णानि युगानीव । इवशब्दः संप्रत्यर्थे । पुरातना यागकाला यथा तद्वदद्यतना अपीत्यर्थः । पूर्वकाले यथा युवामेव स्तुवंति तद्वदिदानीमपीति तात्पर्यं ॥

**अस्मे सा वां माध्वी रातिरस्तु स्तोमं हिनोतं मान्यस्य कारोः । अनु यद्वां श्रवस्या सुदानू सुवीर्याय चर्षणयो मदंति ॥ ४ ॥**

अस्मे इति । सा । वां । माध्वी इति । रातिः । अस्तु । स्तोमं । हिनोतं । मान्यस्य । कारोः ॥ अनु । यत् । वां । श्रवस्या । सुदानू इति सुऽदानू । सुऽवीर्याय । चर्षणयः । मदंति ॥ ४ ॥

हे माध्वी मधुपूर्णपात्रयुक्तावश्विनौ वां युवयोः संबंधिनी सा प्रसिद्धा रातिर्दानमस्मे अस्माकमस्तु भवतु । तदर्थं मान्यस्य मननीयस्य कारोः स्तोतुरगस्त्यस्य स्तोमं स्तुतिं हिनोतं प्रीणयतं । हे सुदानू शोभनफलदानौ वां युवां श्रवस्या कीर्तेरन्नस्य वेच्छया यत् यस्मात्सुवीर्याय यजमानाय शोभनबलाय वा चर्षणयो मनुष्या ऋत्विग्रूपा अनुमदंति अनुक्रमेण मादयंति युवाभ्यां सह स्वयं वा ॥

**एष वां स्तोमो अश्विनावकारि मानेभिर्मघवाना सुवृक्ति । यातं वर्तिस्तनयाय त्मने चागस्त्ये नासत्या मदंता ५**

एषः । वां । स्तोमः । अश्विनौ । अकारि । मानेभिः । मघऽवाना । सुऽवृक्ति ॥ यातं । वर्तिः । तनयाय । त्मने । च । अगस्त्ये । नासत्या । मदंता ॥ ५ ॥

हे अश्विनौ हे मघवाना हविर्लक्षणान्नवंतौ वां युवाभ्यामेषः स्तोमः स्तोत्रं सुवृक्ति सुष्ठु पापवर्जनं यथा भवति तथा । यद्वा सुसमाप्त्यकारि कृतः । कीदृशोऽयं । मानेभिर्मानैर्हविःप्रदानरूपैः सहितः । हे नासत्या असत्यरहितौ युवामगस्त्य एतन्नाम्नि महर्षौ मयि मदंता मादयंतौ संतौ वर्तिर्गृहं यज्ञसंबंधि यातं प्राप्नुतं । किमर्थं । तनयाय पुत्रादिलाभाय । त्मने आत्मने च हिताय ॥

अतारिष्म तमसस्पारमस्य प्रति वां स्तोमो अश्विनावधायि। एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुं॥६॥

अतारिष्म। तमसः। पारं। अस्य। प्रति। वां। स्तोमः। अश्विनौ। अधायि॥ आ। इह। यातं। पथिऽभिः। देवऽयानैः। विद्याम। इषं। वृजनं। जीरऽदानुं॥ ६॥

हे अश्विनौ युवयोः प्रसादादस्य तमसस्तमनहेतोः श्रेयःप्रतिबंधरूपस्य दुःखस्य पारं पर्यंतभूमिमतारिष्म उत्तीर्णाः स्मः। हे अश्विनौ वां प्रति स्तोमः स्तोत्रमधायि। अकारीत्यर्थः। युवां देवयानैर्देवगंतव्यैर्मार्गैरिहास्मद्यज्ञ आयातं आगच्छतं। वयमपीषमन्नं वृजनं बलं जीरदानुं जयशीलदानमेतत्सर्वं विद्याम युष्मास्वागतेषु यज्ञसंपूर्त्यैष्ट्यादिद्वारा लभेमहि॥

(मं० २ सू० २३.)

---

# ७.

गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमं। ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनं॥ १॥

गणानां। त्वा। गणऽपतिं। हवामहे। कविं। कवीनां। उपमश्रवःऽतमं॥ ज्येष्ठऽराजं। ब्रह्मणां। ब्रह्मणः। पते। आ। नः। शृण्वन्। ऊतिऽभिः। सीद। सदनं॥ १॥

हे ब्रह्मणस्पते ब्रह्मणोऽन्नस्य परिवृढस्य कर्मणो वा पते पालयितः गणानां देवादिगणानां संबंधिनं गणपतिं स्वीयानां पतिं। कवीनां क्रांतदर्शिनां कविं। उपमश्रवस्तमं। उपमीयतेऽनयेत्युपमा। सर्वेषामन्नानामुपमानं श्रवोऽन्नं यस्य स तथोक्तः। अतिशयेनोपमश्रवा उपमश्रवस्तमः॥ माङ् माने। आतश्चोपसर्गे करणेऽङ् प्रत्ययः। ङ्यापोः संज्ञाछंदसोरिति ह्रस्वत्वं॥ ज्येष्ठराजं। ज्येष्ठाः प्रशस्यतमाः तेषां मध्ये राजंतं ब्रह्मणां मंत्राणां स्वामिनं त्वा त्वां हवामहे। अस्मिन्कर्मण्याह्वयामः। किंच नोऽस्माकं स्तुतीः शृण्वन् त्वमूतिभिः पालनैर्हेतुभूतैः सादनं सीदंत्यस्मिन्निति सदनं यज्ञगृहमासीद उपविश॥

देवाश्चित्ते असुर्य प्रचेतसो बृहस्पते यज्ञियं भागमानशुः । उस्रा इव सूर्यो ज्योतिषा महो विश्वेषामिज्जनिता ब्रह्मणामसि ॥ २ ॥

देवाः । चित् । ते । असुर्य । प्रऽचेतसः । बृहस्पते । यज्ञियं । भागं । आनशुः ॥ उस्राःऽइव । सूर्यः । ज्योतिषा । महः । विश्वेषां । इत् । जनिता । ब्रह्मणां । असि ॥ २ ॥

असुर्य असुराणां हंतः हे बृहस्पते प्रचेतसः प्रकृष्टज्ञानास्ते त्वदीया देवाश्चित् देवा अपि यज्ञियं यज्ञार्हं भागमानशुः प्राप्नुवन् । यद्वा प्रचेतस इति बृहस्पतेर्विशेषणं । प्रकृष्टज्ञानवतस्ते तव संबंधिनो देवा इति योजनीयं । यद्वा प्रचेतसः । विभक्तिविपरिणामः । प्रचेतसि त्वयि सति देवा यज्ञियं भागमानशिरे । कर्मविघ्नकारिणामसुराणां रक्षोघ्नमंत्रैरपाकरणात् । न वै ब्रह्मण्वद्रिष्यतीति श्रवणात् । ज्योतिषा तेजसा महो मंहनीयः सूर्य उस्रा इव । उस्राः किरणाः । स्फायितंचीत्यादिना रक्प्रत्ययः । यथा किरणान् जनयति तथा विश्वेषां सर्वेषां ब्रह्मणां मंत्राणां जनितेत् जनयितैवासि । जनिता मंत्र इति निपातनाण्णिलोपः ॥

आ विबाध्या परिरापस्तमांसि च ज्योतिष्मंतं रथमृतस्य तिष्ठसि । बृहस्पते भीममभिमित्रदंभनं रक्षोहणं गोत्रभिदं स्वर्विदं ॥ ३ ॥

आ । विऽबाध्य । परिऽरपः । तमांसि । च । ज्योतिष्मंतं । रथं । ऋतस्य । तिष्ठसि ॥ बृहस्पते । भीमं । अमित्रऽदंभनं । रक्षःऽहनं । गोत्रऽभिदं । स्वःऽविदं ॥ ३ ॥

हे बृहस्पते परिरपः परितो रपः पापरूपं रक्षः । यद्वा रप लप व्यक्तायां वाचि । क्विप् । परिवदतो निंदकान् तमांसि च विबाध्य तेजसा निराकृत्य ज्योतिष्मंतं ज्योतिषा तद्वंतमृतस्य यज्ञस्य प्रापकं भीमं शत्रूणां भयंकरममित्रदंभनं शत्रूणां हिंसकं । तदेवाह रक्षोहणं रक्षसां हंतारं गोत्रभिदं मेघानां भेत्तारं स्वर्विदं स्वर्गस्य लंभकं रथमातिष्ठसि अधितिष्ठसि ॥

सुनीतिभिर्नयसि त्रायसे जनं यस्तुभ्यं दाशान्न तमंहो अश्नवत् । ब्रह्मद्विषस्तपनो मन्युमीरसि बृहस्पते महि तत्ते महित्वनं ॥ ४ ॥

सुनीतिऽभिः । नयसि । त्रायसे । जनं । यः । तुभ्यं । दाशात् । न । तं । अंहः । अश्नवत् ॥ ब्रह्मऽद्विषः । तपनः । मन्युऽमीः । असि । बृहस्पते । महि । तत् । ते । महिऽत्वनं ॥ ४ ॥

हे बृहस्पते सुनीतिभिः शोभना नीतयो येषु ते सुनीतयः सन्मार्गाः तैर्जनं नयसि अपेक्षितफलं प्रापयसि । त्रायसे जनमापद्भ्यो रक्षसि च । यो यजमानस्तुभ्यं हविर्लक्षणमन्नं दाशात् प्रयच्छेत् । दाशृ दाने । लेट्याडागमः । तमंहः पापं पापरूपं दारिद्र्यं वा नाश्नवत् न प्राप्नुयात् । अश्नोतेर्लेटि व्यत्ययेन परस्मैपदं । अडागमः । ब्रह्मद्विषो ब्राह्मणानां मंत्राणां वा द्वेष्टॄस्तपनस्तापकोऽसि । किंच मन्युमीर्मन्योः क्रोधस्य परेषां ज्ञानस्य वा हिंसकोऽसि । मीङ् हिंसायां । क्विप् । ते तव तत्तादृशं महि महत् प्रभूतं महित्वनं माहात्म्यमस्ति ॥

न तमंहो न दुरितं कुतश्चन नारातयस्तितिरुर्न द्वयाविनः । विश्वा इदस्माद्ध्वरसो वि बाधसे यं सुगोपा रक्षसि ब्रह्मणस्पते ॥ ५ ॥

न । तं । अंहः । न । दुःऽइतं । कुतः । चन । न । अरातयः । तितिरुः । न । द्वयाविनः ॥ विश्वाः । इत् । अस्मात् । ध्वरसः । वि । बाधसे । यं । सुऽगोपाः । रक्षसि । ब्रह्मणः । पते ॥ ५ ॥

हे ब्रह्मणस्पते सुगोपाः सुष्ठु पालयिता त्वं यं जनं रक्षसि पालयसि तं जनमंह आहंतव्यं दुःखं न बाधते । दुरितं तत्कारणं पापं च न बाधते । अरातयो हिंसकास्तं जनं कुतश्चन सर्वासु दिक्षु न तितिरुः । तिरतिर्हिंसाकर्मा । लिट् । न हिंसंति । तथा द्वयाविनः । मनस्यन्यत्क्रियायां चान्यदित्येतद्द्वयं येषामस्ति ते द्वयाविनो वंचकाः तेऽपि तं जनं न बाधंते । किंच अस्मात् ध्वरसो वा हिंसिका विश्वाः सर्वाः सेनास्तदर्थं विबाधसे विशेषेण बाधस एव ॥

त्वं नो गोपाः पथिकृद्विचक्षणस्तव व्रताय मतिभिर्जरामहे । बृहस्पते यो नो अभि ह्वरो दधे स्वा तं मर्मर्तु दुच्छुना हरस्वती ॥ ६ ॥

त्वं । नः । गोपाः । पथिऽकृत् । विऽचक्षणः । तव । व्रताय । मतिऽभिः । जरामहे ॥ बृहस्पते । यः । नः । अभि । ह्वरः । दधे । स्वा । तं । मर्मर्तु । दुच्छुना । हरस्वती ॥ ६ ॥

हे बृहस्पते त्वं नोऽस्माकं गोपाः पालयिता पथिकृत् सन्मार्गश्च भवसि । विचक्षणो विशेषेण द्रष्टा सर्वज्ञस्त्वं। तव व्रताय त्वत्संबंधिने यज्ञाय मतिभिः स्तोत्रैर्जरामहे। स्तुमः । जरतिः स्तुतिकर्मा । यः पुमान् नोऽस्मानभि अभिलक्ष्य ह्वरः । ह्वृ कौटिल्ये । भावेऽसुन् । कौटिल्यं दधे विदधाति तं स्वा स्वीया दुच्छुना दुर्बुद्धिर्हरस्वती वेगवती सती मर्मर्तु मोचयतु । मृङ् प्राणत्यागे । अंतर्भावितण्यर्थस्य यङ्लुकि लोटि रूपं ॥

उत वा यो नो मर्चयादनागसोऽरातीवा मर्तः सानुको वृकः। बृहस्पते अप तं वर्तया पथः सुगं नो अस्यै देववीतये कृधि ॥ ७ ॥

उत । वा । यः । नः । मर्चयात् । अनागसः । अरातिऽवा । मर्तः । सानुकः । वृकः ॥ बृहस्पते । अप । तं । वर्तय । पथः । सुऽगं । नः । अस्यै । देवऽवीतये । कृधि ॥ ७ ॥

उत वा अपि च हे बृहस्पते अरातीवाभिमुखमागमनवान् सानुकः समुच्छ्रतः सानु समुच्छ्रितमिति यास्कः । नि० २. २४. वृकः । वृक आदाने । धनादीनामादाता यो मर्त्यो मनुष्योऽनागसोऽपराधहीनान्नोऽस्मान् मर्चयात् । मर्चयतिहिंसाकर्मा । हिंस्यात् । तं मर्तं पथो वैदिकान्मार्गादपवर्तय निवर्तय । नोऽस्माकमस्यै देववीतये देवानां वीतिं सोमभक्षणमर्चयतीति देववीतिर्यज्ञः। अस्यै देववीतयेऽस्मै यज्ञाय नोऽस्माकं सुगं सुष्ठु गंतव्यं मार्गं कृधि कुरु । यज्ञानुष्ठानाय सुमतिं देहीत्यर्थः ॥

त्रातारं त्वा तनूनां हवामहेऽवस्पर्तरधिवक्तारमस्मयुं । बृहस्पते देवनिदो नि बर्हय मा दुरेवा उत्तरं सुम्नमुन्नशन् ८

त्रातारं । त्वा । तनूनां हवामहे । अवऽस्पर्तः । अधिऽवक्तारं । अस्मऽयुं ॥ बृहस्पते । देवऽनिदः । नि । बर्हय । मा । दुःऽएवाः । उत्ऽतरं । सुम्नं । उत् । नशन् ॥ ८ ॥

अवस्पर्तः उपद्रवेभ्यः पारयितः। यद्वा अवसा रक्षणेनापद्भ्यः पारयित हे ब्रह्मणस्पते तनूनामंगानां पुत्रादीनां वा त्रातारं पालयितारमधिवक्तारमस्मासु पक्षपातेनाधिकं वक्तारमस्मयुं हविःप्रदानस्मान् कामयमानं त्वां हवामहे अस्मिन्कर्मण्याह्वयामः । किंच देवनिदो देवनिंदकानसुरान् निबर्हय विनाशय । दुरेवा दुष्टगमना दुर्बुद्धयः शत्रव उत्तरमुत्कृष्टतरं सुम्नं सुखं मा उन्नशन् मा व्याप्नुवंतु ॥

त्वया॑ व॒यं सु॒वृधा॑ ब्रह्मणस्पते स्पा॒र्हा वसु॑ मनु॒ष्या द॑दी॑महि । या नो॑ दू॒रे त॒ळितो॒ या अरा॑तयो॒ऽभिसंति॒ जं॒भया॒ ता अ॑न॒प्नसः॑ ॥ ९ ॥

त्वया॑ । व॒यं । सु॒ऽवृधा॑ । ब्र॒ह्म॒णः॒ । प॒ते॒ । स्पा॒र्हा । वसु॑ । म॒नु॒ष्या॑ । आ । द॒दी॒म॒हि॒ ॥ याः॑ । नः॒ । दू॒रे । त॒ळितः॑ । याः॑ । अरा॑तयः । अ॒भि । संति॑ । जं॒भय॑ । ताः॑ । अ॒न॒प्नसः॑ ॥ ९ ॥

हे ब्रह्मणस्पते सुवृधा सुष्ठु वर्धयित्रा त्वया हेतुना वयं स्पार्हा स्पृहणीयानि वसु धनानि मनुष्या । सुपां सुलुगिति चतुर्थीवहुवचनस्याकारः । मनुष्येभ्यो दातृभ्य आददीमहि गृह्णीमहि । आङो दोऽनास्यविहरण इत्यात्मनेपदं । दूरे दूरदेशे या अरातयः याश्च तळितोऽतिकेऽरातयो नोऽस्मानभिसंति अभिभवंति अनप्नसः कर्महीनान् ता अरातीस्तान् शत्रून् जंभय नाशय । जभि नाशने चुरादिः । अत्र निरुक्तं । त्वया वयं सुवर्धयित्रा ब्रह्मणस्पते स्पृहणीयानि वसूनि मनुष्येभ्य आददीमहि याश्च नो दूरे तळितो याश्चांतिकेऽरातयोऽदानकर्माणो वा दानप्रज्ञा वा जंभय ता अनप्नसोऽप्न इति रूपनाम । नि० ३. ११. । इति ॥

त्वया॑ व॒यमु॑त्त॒मं धी॑मह॒े वयो॒ बृह॑स्पत॒े पप्रि॑णा॒ सस्नि॑ना यु॒जा । मा नो॑ दुः॒शंसो॑ अभिदि॒प्सुरी॑शत॒ प्र सु॒शंसा॑ म॒तिभि॑स्तारिषीमहि ॥ १० ॥

त्वया॑ । व॒यं । उ॒त्ऽत॒मं । धी॒म॒हे॒ । वयः॑ । बृह॑स्पते । पप्रि॑णा । सस्नि॑ना । यु॒जा ॥ मा । नः॒ । दुः॒ऽशंसः॑ । अ॒भि॒ऽदि॒प्सुः । ई॒श॒त॒ । प्र । सु॒ऽशंसाः॑ । म॒तिऽभिः॑ । ता॒रि॒षी॒म॒हि॒ ॥ १० ॥

हे वृहस्पते पप्रिणा ॥ पृ पालनपूरणयोः । आदृगमहनेति किन्प्रत्ययः । छांदसो यणादेशः । कामानां पूरकेण सस्निना शुद्धेन युजा सहायेन त्वया हेतुनोत्तमं वयो हविर्लक्षणमन्नं वयं धीमहे धारयामः । धी धारणे । दैवादिकः । दुःशंसो दुःशंसनीयोऽभिदिप्सुरभिदंभितुमभिभवितुमिच्छुः पुरुषो नोऽस्माकं मा ईशत मा ईशिष्ट ईश्वरो मा भवतु । ईश ऐश्वर्ये । लेट्यडागमः । वयं मतिभिः स्तोत्रैः सुशंसाः शोभनशंसनोपेताः संतः प्रतारिषीमहि प्रकर्षेण वर्धेमहि ॥

अनानुदो वृषभो जग्मिराहवं निष्टप्ता शत्रुं पृतनासु सासहिः । असि सत्य ऋणया ब्रह्मणस्पत उग्रस्य चिद्दमिता वीळुहर्षिणः ॥ ११ ॥

अनुनुऽदः । वृषभः । जग्मिः । आऽहवं । निःऽतप्ता । शत्रुं । पृतनासु । सासहिः ॥ असि । सत्यः । ऋणऽयाः । ब्रह्मणः । पते । उग्रस्य । चित् । दमिता । वीळुऽहर्षिणः ॥ ११ ॥

हे ब्रह्मणस्पते अनानुदः अनु पश्चाद्ददातीत्यनुदः स यस्य नास्तीत्यननुदः । दात्रंतरशून्य इत्यर्थः । अत एव वृषभः कामानां वर्षिता । आहवं आहूयतेऽत्रेत्याहवो युद्धं । आङि युद्धे । पा० ३. ३. ७३ । इत्यप्प्रत्ययः संप्रसारणं च । तद्युद्धं जग्मिर्गंता । आदृगमहनेति किन्प्रत्ययः । लिड्वद्भावादाहवमित्यत्र षष्ठीप्रतिषेधः । शत्रुं शातयितारं निष्टप्ता नितरां तस्य तापकः । तृन्नंतत्वात्षष्ठीप्रतिषेधः । निसस्तपतावनासेवने । पा० ८. ३. १०२. । इति षत्वं । तादौ च नितीति गतेः स्वरः । पृतनासु संग्रामेषु सासहिः शत्रूणामभिभविता एतादृशस्त्वं सत्यः सत्यपराक्रमः सत्यप्रज्ञो वासि । ऋणया ऋणस्य यावयितासि । यु मिश्रणामिश्रणयोः । ण्यंतस्य क्विपि णिलोपे लोपो व्योर्वलीति वलोपः । किंच उग्रस्य चित् ओजस्विनोऽपि दमितोपशमयिता वीळुहर्षिणो दृढहर्षस्य कामुकस्य नास्तिकस्य चिद्दमितासि ॥

अदेवेन मनसा यो रिषण्यति शासामुग्रो मन्यमानो जिघांसति । बृहस्पते मा प्रणक्तस्य नो वधो नि कर्म मन्युं दुरेवस्य शर्धतः ॥ १२ ॥

अदेवेन । मनसा । यः । रिषण्यति । शासां । उग्रः । मन्यमानः । जिघांसति ॥ बृहस्पते । मा । प्रणक् । तस्य । नः । वधः । नि । कर्म । मन्युं । दुःऽएवस्य । शर्धतः ॥ १२ ॥

यः पुमान् अदेवेन देवानमन्यमानेन । यद्वा आसुरवृत्तिविशिष्टेन मनसास्मान् रिषण्यति हिनस्ति । दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यतीति निपातितः । यश्चोग्रः पापचित्तो मन्यमान आत्मानं बहुमन्यमानः पुमान् शासामुक्थस्य शंसितारं । यद्वा अस्माकमाशंसां शासितॄणामुग्र इति वा योजनीयं । अस्मान् जिघांसति हंतुमिच्छति । हंतेः सन्यज्झनगमां सनीति दीर्घः । हे बृहस्पते तस्य वधः । वध्यतेऽनेनेति वध आयुधं । नोस्मान्मा पृणक् मा संपर्कयतु । पृची संपर्के श्नम् विकरणी । व्यत्ययेनागमः । चादिलोप इति न निघातः । व्यत्ययेनानुदात्तः । किंच दुरेवस्य दुष्टगमनस्य शर्धतो बल-

वतः । यद्वा दुष्टाभिसंधेर्वेगं कुर्वतस्तस्य मन्युं क्रोधं ज्ञानं वा निकर्मं त्वत्प्रसादान्निराकुर्मश्च ॥

भरेषु हव्यो नमसोपसद्यो गंता वाजेषु सनिता धनंधनं । विश्वा इदर्यो अभिदिप्स्वो३मृधो बृहस्पतिर्वि ववर्हा रथाँ इव ॥ १३ ॥

भरेषु । हव्यः । नमसा । उपऽसद्यः । गंता । वाजेषु । सनिता । धनंऽधनं ॥ विश्वाः । इत् । अर्यः । अभिऽदिप्स्वः । मृधः । बृहस्पतिः । वि । ववर्ह । रथान्ऽइव ॥ १३ ॥

स बृहस्पतिर्भरेषु संग्रामेषु हव्यो योद्धृभिः स्वरक्षणार्थमाह्वातव्यो नमसोपसद्यः सर्वैर्नमसोपसदनीयः । किंच वाजेषु गंता संग्रामेषु रक्षार्थं गमनशीलः । तथा धनं धनं सनिता संभक्ता दाता वा । तृन्नंतत्वात्षष्ठीप्रतिषेधः । तथार्यः स्वामी बृहस्पतिरभिदिप्स्वोऽभिभवनेच्छावतीर्विश्वा इत् सर्वा एव मृधो हिंसिकाः सेना रथानिव युद्धे वेगेन परकीयान्रथानिव विववर्ह विशेषेण शिथिलीचकार । यद्वा इवशब्दश्चार्थे । रथांश्च विववर्ह । लडर्थे लिट् ॥

तेजिष्ठया तपनी रक्षसस्तप ये त्वा निदे दधिरे दृष्टवीर्यं । आविस्तत्कृष्व यदसत्त उक्थ्यं१ बृहस्पते वि परिरापो अर्दय १४

तेजिष्ठया । तपनी । रक्षसः । तप । ये । त्वा । निदे । दधिरे । दृष्टऽवीर्यं ॥ आविः । तत् । कृष्व । यत् । असत् । ते । उक्थ्यं । बृहस्पते । वि । परिऽरपः । अर्दय ॥ १४ ॥

हे बृहस्पते तेजिष्ठयातिशयेन तिग्मया तपनी तापकारिण्या हेत्या रक्षसो राक्षसांस्तप तापय । ये राक्षसा दृष्टवीर्यं युद्धेषु दृष्टपराक्रमं त्वा त्वां निदे निंदाया विषयं दधिरे कृतवंतः तान् तापयेति समन्वयः । ते तवोक्थ्यं सर्वैः प्रशंसनीयं यद्वीर्यमसत् पूर्वमासीत् तदधुनाविष्कृष्व प्रकटीकुरु । तेन च वीर्येण परिरापः परिवदतो निंदकानसुरान् व्यर्दय विशेषेण बाधस्व ॥

बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रं १५

बृहस्पते । अति । यत् । अर्यः । अर्हात् । द्युऽमत् । विऽभाति । क्रतुऽमत् । जनेषु ॥ यत् । दीदयत् । शवसा । ऋतऽप्रजात । तत् । अस्मासु । द्रविणं । धेहि । चित्रं ॥ १५ ॥

ऋतप्रजात सत्येनोत्पन्न हे बृहस्पते अर्यः श्रेष्ठो ब्राह्मणः सर्वान् कामानतीत्य यद्ब्रह्मवर्चसं तेजोऽर्हात् पूजयेत् । अर्ह पूजायां लेट्याडागमः । जनेषु ब्राह्मणेषु द्युमत् दीप्तियुक्तं क्रतुमत् ज्ञानोपेतं यद्ब्रह्मवर्चसं विभाति विशेषेण दीप्यते । यच्च शवसा बलेन स्वाश्रयं जनं दीदयत् । दीदयतिर्दीप्तिकर्मा । दीपयति । चित्रं चायनीयं तद्ब्रह्मवर्चसरूपं द्रविणमस्मासु धेहि निधेहि । यद्वा अर्य उदारोऽपि त्वया दत्तं धनमतीवार्हात् श्रद्दधीत । यच्च त्वद्दत्तं धनं जनेषु तव स्तोत्रं कुर्वाणेषु दीप्तियुक्तं कर्मसाधनं च विभाति। यच्च धनं शवसान्नादिसमृद्ध्या दीदयत् स्वाश्रयं दीपयति तादृशं धनमस्मासु धेहि । तथा च ब्राह्मणं। बृहस्पते अति यदर्यो अर्हादित्येतया परिदध्यात्तेजस्कामो ब्रह्मवर्चसकामोऽतीवान्यान्ब्रह्मवर्चसमर्हति द्युमदिति द्युमदिव वै ब्रह्मवर्चसं विभातीति वीव वै ब्रह्मवर्चसं भाति यद्दीदयच्छवस ऋतप्रजातेति दीदायेव वै ब्रह्मवर्चसं तदस्मासु द्रविणं धेहि चित्रमिति चित्रमिव वै ब्रह्मवर्चसं ब्रह्मवर्चसी ब्रह्मयशसी भवतीति । ४. ११.

मा नः स्तेनेभ्यो ये अभि द्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः । आ देवानामोहते वि व्रयो हृदि बृहस्पते न परः साम्नो विदुः ॥ १६ ॥

मा । नः । स्तेनेभ्यः । ये । अभि । द्रुहः । पदे । निरामिणः । रिपवः । अन्नेषु । जागृधुः ॥ आ । देवानां । ओहते । वि । व्रयः । हृदि । बृहस्पते । न । परः । साम्नः । विदुः ॥ १६ ॥

हे बृहस्पते नोऽस्मान् स्तेनेभ्यः । स्त्यानमस्ति येष्विति स्तेनाश्चौराः तेभ्यो मा दाः । तान् दर्शयति । ये चौरा द्रुहः प्राणद्रोहस्य पदे स्थाने निरामिणो नितरां रमणशीला रिपवो हिंसकाः संतोऽन्नेषु परकीयेष्वभिजागृधुः अभिकांक्षंति । गृधु अभिकांक्षायां । लिटि रूपं । ये च देवानां विव्रयो विशेषेण वर्जनं । व्री व्ली इति धातू वर्जने वर्तेते । य एवं विद्वान् दक्षिणां प्रतिगृह्णाति नैनं दक्षिणा व्लीनातीत्येकस्य वर्जनार्थे दृष्टत्वादपरस्यापि वर्जनार्थत्वं । तत् हृदि स्वकीये हृदय आ ओहते आवहंति । देवानां यागान् स्तुतींश्च न करवामेति मन्यंत इति यावत् । तेभ्योऽस्मान् मा दा इति समन्वयः । ये दुष्टाः साम्नः साममयात्त्वत्तः परः परस्तादन्यदुत्कृष्टं साम यद्रक्षोघ्नं।

